सुव्यक्ताट्टालिकान् दुर्गान् बलयानि च खोटति ।
रिपूणां खोटयत्याजौ कुञ्जराणां घटाश्च यः ॥ १०७ ॥
न तथा गर्हते ज्ञानं नृणाञ्च नाऽपि गर्हति ।
गर्हयत्यप्युपेतार्थज्ञानिनं स नरं यथा ॥ १०८ ॥
द्राघते वपुरत्यर्थं द्राघते च निशागमे ।
द्राघति चौरतापञ्च यद्वियोगे मृगीदृशां ॥ १०९ ॥
क्षिणाति दुरितं दृष्ट्या क्षिणोत्यर्थैश्च दुःस्थताम् ।
सत्त्वानां नित्यमज्ञानं क्षिणुते यः सदुक्तिभिः ॥ ११० ॥
क्षिपन्ते च यथा रात्रौ परस्त्रीषु क्षिपन्ति च ।
हेडते धीसमग्रो बान्धवानपि तामसो ॥ १११ ॥

आजौ युद्धे, रिपूणां शत्रूणां, कुञ्जराणां हस्तिनां, घटां समूहं, खोटयति भनक्ति ॥ १०७ ॥

यद्वियोगे यस्य राज्ञः विरहे, मृगीदृशां हरिणाक्षीणां, परमरूपवतीनां स्त्रीणामित्यर्थः, वपुः शरीरं, द्राघते दीर्घीभवति, अत्यन्तापकृशतातिशयेन दीर्घं भवतीति भावः। निशागमे रात्रौ, द्राघते प्रकाशरहितं भवते इत्यर्थः। चौरतापञ्च कामतां नष्टं वपुरितिशेषः, शरीरस्य कार्श्यमित्यर्थः, द्राघति वर्द्धते ॥ १०९ ॥

दुरितं पापम्। अर्थैर्धनैः, दुःस्थतां दारिद्र्यं, क्षिणोति विनाशयति ॥ ११० ॥

ये रात्रौ क्षिपन्ते गमयन्ति दुष्कृतार्थं सञ्चरन्तीत्यर्थः। परस्त्रीषु परदारेषु च क्षिपन्ति पापाभिप्रायं प्रकाशयन्ति। धर्मी राजा, बान्धवानपि तान् हेडते अवमन्यते। 'त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता' इति भावः ॥ १११ ॥



अर्हति विपतां हर्षमर्हते दुरितोदयम् ।
यथाऽर्हयति दारिद्र्यं दीनानां द्रविणं ददत् ॥ ११८ ॥
अद्यते विविधं स्वादु स्वाद्यते च रसायनम् ।
आस्वादयति सर्वेषां विषयाणां सुखानि यः ॥ ११९ ॥
यत्र विच्छति तद्भूपो यत्र विच्छाययति स्वयम् ।
विच्छाययति तत्राऽसौ नृपतीनां सुखाश्रयम् ॥ १२० ॥
न बिभेति नरेन्द्रेभ्यो देवेभ्योऽपि न भेषति ।
एकस्मात् भेषते धर्माच्च भेषत्यपलोकतः ॥ १२१ ॥

तद्धनं सत्पात्रेषु विनियोगार्थं, अरीन् प्रभून्, व्यथति गच्छति, प्रभुः प्रजाः विताम्यादृशदति भावः । 'आदानं हि विसर्गाय सतां वारिमुचामिव' इति रघुः । ११७ ।

दुरितोदयं पापक्रियाप्रादुर्भावं, अर्हते निराकरोतीति । द्रविणं, धनं, ददत् प्रयच्छन् सन्, दीनानां दरिद्राणां, दारिद्र्यम् अर्हयति नाशयति । ११८ ।

रसायनं नाम विषयशरीरस्थैर्य: कान्तिपुष्टिबलारोग्यादिकरी भेषजविशेषः, यदुक्तं वैद्यके, दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः । देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात् । इति । स्वाद्यते भक्ष्यते । विषयाणां दिव्यरूपरसगन्धादीनाम् । ११९ ।

तद्भूपः तत्र राज्ञः पुत्रार्थं सुरचितं क्षेत्रं, यत्र विच्छति गच्छति । स्वयं यत्र विच्छाययति गच्छति । तत्र नृपतीनां प्रतिपक्षाणां राज्ञां, सुखाश्रयं सुखाधारभूतं वस्तु, विच्छाययति अपहरति । विच्छायतीत्यत्र 'विच्छाऽसुति-पणीभ्य आयः' इत्यायः, ततो धातुसंज्ञा । १२० ।

देवेभ्यः इन्द्रादिभ्यः, न भेषति बिभेति, यतोऽस्य सततम् इन्द्रादीनां सर्वेषाम् तत्र यजनदानादिकृतदुर्भिक्षादिदैवव्यसनेभ्यो भयं न आपततीति भावः ।

यं क्षणन्ति गुणग्रामः क्षणत्यरिशिरांसि यः।
कीर्त्तयन्ति च गोष्ठीषु यद्गुणानप्सरोगणाः ॥ १२२ ॥
न्यक्षते प्रत्यहं मोहो यस्मान्न्यक्षन्ति चाऽरयः।
अक्षयन्ति सदा यञ्च गुणाः सर्व्वातिशायिनः ॥ १२३ ॥
न क्षुभ्नाति बुभुक्षार्त्तः शीतार्त्तश्च न क्षुभ्यति।
यस्य राष्ट्रे धनाढ्यो वा मृतः कोऽपि न क्षुभ्यति॥१२४॥

अत्राह कामन्दकः, 'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं मानुषं व्यसनं ततः। आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम् ॥ इति ॥ १२१ ॥

गुणग्रामः दयादाक्षिण्यादिसद्गुणसमूहः, यं राजानं, क्षणन्ति वेष्टते समाश्रयतीति यावत्। क्षणति छिनत्ति। अप्सरोगणा उर्व्वशीमेनकाद्या दिव्याङ्गनाः, यदुक्तं वह्निपुराणे, 'उर्व्वशी मेनका रम्भा मिश्रकेशी अलम्बुषा। विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा। आनुमत्यवला वर्णा द्वादशाप्सरसः शुभाः' ॥ इति। गोष्ठीषु सभासु, 'गोष्ठी सभायामालापे' इति विश्वः। यद्गुणान् कीर्त्तयन्ति उच्चैर्गायन्ति ॥ १२२ ॥

यस्मात् मोहः अज्ञानं, न्यक्षते अपगच्छति। अरयः शत्रवः, यस्मात् राज्ञः, न्यक्षन्ति अपसरन्ति भयात् पलायन्त इत्यर्थः। सर्व्वान् अतिशाययन्ति पराभवन्तीति सर्व्वातिशायिनः अनन्यसाधारणा इत्यर्थः, गुणाः शौर्यादयः, यं राजानं, अक्षयन्ति विशेषयन्ति भूषयन्तीति यावत् ॥ १२३ ॥

बुभुक्षार्त्तः क्षुधापीडितो जनः, न क्षुभ्नाति क्लिश्यति। शीतार्त्तः शीतपीडितश्च जनः, न क्षुभ्यति क्लिश्यति। असौ राजा अशनैः क्षुधितानां वसनैश्च शीतार्त्तानां क्लेशमपनयतीत्यर्थः। धनाढ्यो जनः, न क्षुभ्यति परान् क्लिश्नाति, राजदण्डभयादवनतो दुर्बलान् नाऽभिभावयतीति भावः। मृतः कोऽपि न क्षुभ्यति पूतिगन्धमावहति, अनाथानां मृतानां राज्ञैवाऽन्त्येष्टिं करोतीति भावः ॥ १२४ ॥

विचारयति यो धर्म्मं विद्वद्भिर्ब्राह्मणैः सह।
विचारयत्यस्य लोके शरच्चन्द्रोज्ज्वलं यशः॥ १२५॥
अविद्यानिद्रयाक्रान्ते जगत्येकः स चेतति।
धिया चेतयते सर्व्वं परस्य हृदये स्थितम्॥ १२६॥
यो भुजाभ्यां भुवो भारं भरते भरतोपमः।
बिभर्त्ति च यशोराशिं भूयांसं यस्य भूरपि॥ १२७॥
यस्य रोषारुणा दृष्टिर्धावते यत्र मानवे।
पाशपाणिस्ततस्तस्मिन् यमदूतोऽभिधावति॥ १२८॥
शास्त्रेण क्षोभते भूयो लघुप्रकृतिको नरः।
न क्षुभ्नाति महात्माऽसौ न क्षुभ्नोत्यचलस्ततः॥ १२९॥
प्राणिक्ते दक्षिणीयानां विप्राणां चरणेषु यः।
यत्पादौ मौलिरत्नांशुजालैर्नेनेक्ति राजकम्॥१३०॥

---

अविद्या अज्ञानं, सैव निद्रा चैतन्यनिमीलनात् निद्रास्वरूपिणीत्यर्थः, तया आक्रान्ते अभिभूते जगति, एकः केवलः, स चेतति जागर्त्ति, ज्ञानचक्षुषा सर्व्वं पश्यतीत्यर्थः। १२६।

भरतोपमः दुष्मन्तात्मजभरतराजसदृशः, यद्वा मनुतुल्यः, यदुक्तं वायुपुराणे, 'भरणात् प्रजानां वै मनुर्भरत उच्यते। निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम्।' इति। भरते धारयति। १२७।

यस्य राज्ञः, रोषारुणा क्रोधताम्रा, दृष्टिः यत्र मानवे मनुष्ये, धावते निपतति। पाशपाणिः रज्जुहस्तः, यमदूतः तस्मिन् मनुष्ये इति शेषः, अभिधावति, कुपितः सपदि एव रिपुकुलमुन्मूलयतीति भावः। १२८।

दक्षिणामर्हन्तीति दक्षिणीयाः, यज्ञे ब्रह्मर्त्विगादयोऽपि वा महात्मान इत्यर्थः, तेषां चरणैः पादैः, प्राणिक्ते आक्रान्तं पुनाति। राजकं नृपसमूहः,

नाऽवद्यं घोषति द्वारि यस्य कश्चिदुपद्रवम् ।
घोषयन्ति पुनः सर्व्वे दीर्घमायुर्यदाश्रिताः ॥ १४१ ॥
उड्डीयन्ते शरा यस्य कोटिशः समराङ्गने ।
अश्वानामरिसैन्यानामुड्डयन्ते रजांसि च ॥१४२॥
यो छिन्नेनाऽनुनयते छत्रमप्यरिवेष्टितम् ।
न चाऽनुनाययत्यन्यस्तस्य यच्चेतसि स्थितम् ॥१४३॥
मृद्नाति श्रियतां दर्पं यो भुजाभ्यां भुवः पतिः ।
मर्द्दन्ते चरणौ यस्य विद्विषः शरणं गताः ॥ १४४ ॥

---

जनः, संकोचति निमीलति, सर्व्वतेजोऽभिभावी राजाऽयमिति भावः । पद्मे-ऽरहुाति चरविम्बसुन्दरं, चरिमारीणां तदीयरिपुसुन्दरीणां, मुखं, संकुचति निमीलति, पतिनाशजातेन शोकेन मलिनं भवतीत्यर्थः । १४० ।

अवद्यं निन्द्यं, उपद्रवम् उत्पातं, राजापराधजन्यम् अकालमृत्युदुर्भिक्षादि-व्यसनमित्यर्थः, घोषति आवेदयति । यदाश्रिताः सर्व्वे यदधिकृताः सर्व्वाः प्रकृतय इत्यर्थः, दीर्घम् आयुः परमायुषं, घोषयन्ति प्रचारयन्ति, पुत्रपौत्र-वीक्षिणो चिरायुषः सर्व्वाः प्रजास्तदधिकारे तिष्ठन्ति इति भावः । १४१ ।

उड्डीयन्ते उत्पतन्ति । अश्वानां पक्षावपराणाम् । १४२ ।

छिन्नेन चिह्नेन, छत्रं निश्चितम् परिवेष्टितं परमच्छन्नाभिप्रायम्, अनुनयते जानाति, ज्ञाता च सर्व्वेव तत्प्रतीकारोपायं चिन्तयतीति भावः । अन्यः अपरः, तस्य चेतसि यत् स्थितं तदीयम् इङ्गितमित्यर्थः, न अनुनाययति ज्ञातुं शक्नोति, अतिगूढाकारेङ्गितोऽसौ राजेति भावः । तथा चोक्तं, गुप्तेङ्गिताकारगुणस्य नाथो नित्यं जयेदतः । नाऽस्य छिद्रं परोविद्याद् विद्या-च्छिद्रं परस्य तु । गूहेत् कूर्म इवाङ्गानि रक्षेद् विवरमात्मनः ॥ इति ॥१४३॥

मृद्नाति चूर्णयति सर्व्वथा अपहरतीति यावत् । मर्द्दन्ते संवाहयन्ति ॥१४४॥

मिलन्ति प्रत्यहं यस्य वाजिवारणसम्पदः ।
मीलन्ति रिपुनारीणां मुखपद्मवनानि च ॥ १४५ ॥
यस्य व्याघोटते दण्डो नाकृतार्थः कृतश्चन ।
व्याघुटन्ति विपक्षाश्च यत्पश्चात्समुपागताः ॥ १४६ ॥
यो वाग्मी वादिनां मध्ये वाचमुच्चैः प्रपद्यते ।
प्रपञ्चयन्ति यत्कीर्तिं दिङ्मुखेषु महाजनाः ॥ १४७ ॥
यस्य न्यायार्जितैर्वित्तैः पूज्यमाना दिने दिने ।
तुष्यन्ति ब्राह्मणा नित्यं तूषन्ति कुलदेवताः ॥ १४८ ॥
मनो नोद्विजते यस्य ददतोऽर्थमनर्गलम् ।
उद्विजन्ति च संसारादसारादात्मवेदिनः ॥ १४९ ॥
भेदते न परं कञ्चित् स्वामी यः समदर्शनः ।
तं भिन्दति परीवादं परस्य विदधाति यः ॥ १५० ॥

---

वाजिनो घोटकाः, वारणाः करिणः, सम्पदो धनरत्नानि च, यद्वा वाजिवारणरूपाः सम्पदः । मिलन्ति एकत्र संहता भवन्ति ॥ १४५ ॥

यस्य राज्ञः, दण्डः अकृतार्थः विफलः सन्, न व्याघोटते प्रत्यावर्तते, सम्प्रणीतं दण्डं न कोऽप्यतिवर्तत इत्यर्थः । व्याघुटन्ति पलायन्ते ॥ १४६ ॥

प्रपद्यते विस्तृणोति उदीरयतीति यावत् । प्रपञ्चयन्ति घोषयन्ति ॥ १४७ ॥

कुलदेवताः गृहदेवताः, 'सजातीयगणे गोत्रे देहेऽपि कथितं कुलम्' इति विश्वः ॥ १४८ ॥

उद्विजन्ति विरज्यन्ते । आत्मवेदिनः ब्रह्मज्ञानसम्पन्नाः ॥ १४९ ॥

भेदते भिनत्ति, भिद निन्दायामित्यस्य भौवादिकस्य प्रयोगः । समदर्शनः सर्वत्र समदृष्टिः, विचारादिकारी अयं मित्रः परो वेति भेदरहित इति यावत् ।

पितॄन् पूरयति श्राद्धे कव्यकव्यैश्च यः सदा ।
पूर्यन्ते पितरस्तस्य प्रसादैरुदितोदितम् ॥ १५१ ॥
न प्रगल्भायते मिथ्यावचनैर्यः कदाचन ।
वाजी प्रगल्भते दोर्भ्यां द्विषां विघटयन् घटाः ॥१५२ ॥
प्रकाशते यथा व्योम्नि चन्द्रः संपूर्णमण्डलः ।
प्रकाश्यते तथा भूमौ प्रजानां नयनोत्सवः ॥ १५३ ॥
यज्ञस्याऽन्ते द्विजातिभ्यो दातुं हृष्यति यो धनं ।
चैत्यदेवकुलव्याजाद्यशस्तर्पयतीव यः ॥ १५४ ॥
विनाऽपराधमारण्यान् न खेटति मृगानसौ ।
खेटयत्यरिवीरांश्च संग्रामरसिकान् नृपः ॥ १५५ ॥

---

परीवादम् अपवादम् । १५० ।

उदितोदितं श्लाघ्यं पण्डितमिति यावत् । १५१ ।

वाजी युद्धे, द्विषां रिपूणां घटाः समूहान्, विघटयन् विश्लेषयन्, प्रगल्भते प्रभुत्वमभिमानमाविष्करोतीति । १५२ ।

नयनोत्सवः नयनानन्दकरः । प्रकाश्यते विभाति । १५३ ।

चैत्यदेवकुलव्याजादिति । चैत्येषु देवागारेषु यानि देवकुलानि प्रतिष्ठितदेवस्थानानि, तद्व्याजात् तदपदेशेन, यद्वा, चैत्यानि यज्ञस्थानानि, देवकुलानि देवस्थानानि, तद्व्याजात्, यज्ञातीयजने दीपे प्रदेशेऽपि कश्चित् कुलमिति स्थितः । यशः कीर्त्तिं, तर्पयति दीपयति, यज्ञदेवप्रतिष्ठादानव्यापारैर्भूयसीं कीर्त्तिमर्जयतीति भावः । १५४ ।

विनाऽपराधमित्यादिनाऽस्य मृगयाव्यसनराहित्यं विवक्षितम्, तथाचोक्तं, 'वर्जयेत सुरापानं मृगयां वर्जयेत् सदा' इति । खेटयति हन्तीत्यर्थः । १५५ ।

उद्वहते न कस्याऽपि गर्वं सर्वोपरायणः।
उद्वहयति गोष्ठीषु सर्व्वेषामेव यो गुणान् ॥१६५॥
तेपन्ते यस्य वक्त्रेन्दोर्लावण्यामृतबिन्दवः।
यं वीक्ष्य तेपते स्त्रीणां वपुः स्मरशराहतम् ॥१६६॥
क्षमते यो दरिद्राणां दुष्टान् न क्षमति प्रभुः।
न क्षाम्यति क्षितीशानामपराधकथामपि ॥१६७॥
तितिक्षते क्षमी यस्तु सापराधेषु साधुषु।
तेजयन्ति समाक्रम्य सर्व्वा च सतां गिरम् ॥१६८॥
यस्य योगनिमग्नस्य भोगतृष्णा कृशायते।
श्लथते दीर्घसंसारग्रन्थिर्वाक्यविनिश्चयात् ॥१६९॥

---

भीमादिवत् प्रयोगः। १६४।

उद्वहते उच्चलति। गोष्ठीषु सभासु, सर्व्वेषां गुणान्, उद्वहयति विवृणोति, सर्व्वएव तत्सकाशात् गुणानुरूपां पूजां लभन्ते इति भावः। १६५।

यस्य वक्त्रेन्दोः मुखचन्द्रात्, लावण्यामृतबिन्दवः कान्तिसुधाकणिकाः, 'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते'। इति भूपालः। तेपन्ते क्षरन्ति। तेप क्षरणे इत्यस्य प्रयोगः। वपुः शरीरं, स्मरशराहतं कामबाणपीड़ितं सत्, तेपते वेपते। १६६।

तितिक्षते क्षमते, तिज निशाने इत्यस्य सन्नन्तस्य प्रयोगः। सतां साधूनां, गिरं वचनम् उपदेशमितियावत्, आक्रम्य अभिभूय, साधुवाक्यस्य प्रतिकूलाचरणं कृत्वेतिभावः, यं राजानं, तेजयन्ति तीक्ष्णं कुर्व्वन्ति जना इति शेषः। तत्पक्षप्रतिपक्षेष्वयमतितीक्ष्णो भवतीति भावः। १६८।

भोगतृष्णा उपभोगवासना, कृशायते लघुर्भवति। वाक्यविनिश्चयात् मन्त्रानुसन्धानात्, दीर्घसंसारग्रन्थिः शुभाशुभकर्म्मरूपं सुदृढ़ं बन्धनं, श्लथते शिथिलीभवति।१६९।

यो न वञ्चयति किञ्चित् सदा सत्यपरायणः ।
वञ्चन्ति च शरच्चन्द्रं यशसो दिक्षु तद्गुणाः ॥ १७९ ॥
होमाग्निधूमसुरभिः पवते मारुतो मृदुः ।
गोदावरीतरङ्गार्द्रैः पुनाति भुवि यत्प्रजाः ॥ १८० ॥
यो मिमीते च मीमांसां तदर्थमनुतिष्ठति ।
पशवोऽपि न मीमन्ति यद्देशे दुःखपीड़िताः ॥ १८१ ॥
सुखं वपति शालेयमिक्षुक्षेत्रञ्च कर्षति ।
यत्प्रसादादविज्ञातक्लेशो जनपदः सदा ॥ १८२ ॥
शीकन्ते शीकरैः सर्व्वे वायवो दधिपोदधेः ।
चन्द्रावतीतरङ्गार्द्राः शीकयन्ति च यद्वपुः ॥ १८३ ॥

---

वञ्चयते प्रतारयति । वञ्चन्ति गच्छन्ति, साहश्येन प्राप्नुवन्तीत्यर्थः । यशसो निर्म्मलाः । १७९ ।

मीमांसा नाम विचारपूर्व्वकतत्त्वनिर्णायकः ग्रन्थभेदः । मीमांसा च द्विविधा कर्म्ममीमांसा ब्रह्ममीमांसा चेति । कर्म्मकाण्डवेदविचारग्रन्थः कर्म्ममीमांसा जैमिनिप्रणीता, सैव मीमांसात्वेन प्रसिद्धा पूर्व्वमीमांसा इत्युच्यते । ब्रह्मकाण्ड-वेदविचारग्रन्थश्च ब्रह्ममीमांसा वेदव्यासादिप्रणीता, सा वेदान्तत्वेन प्रसिद्धा उत्तरमीमांसा इत्युच्यते । मिमीते अवधारयति । तदर्थं मीमांसोदितकर्म्मादि अनुतिष्ठति सम्पादयति । मीमन्ति शब्दायन्ते आर्त्तनादं कुर्व्वन्तीत्यर्थः । १८१ ।

शालेयं धान्यक्षेत्रम् । जनपदो देशः, देशवासी जनसमूह इति यावत् । १८२ ।

सर्व्वे वायवः, दधिपोदधेः दधिजलसमुद्रस्य, शीकरैः जलकणाभिः, शीकन्ते सिक्ता भवन्ति, शीक सेके इत्यस्य प्रयोगः । चन्द्रावतीतरङ्गार्द्राः चन्द्रावती-वीचिविक्षोभशीतलाः, वायव इति शेषः, यद्वपुः अस्य राज्ञः शरीरं, शीकयन्ति स्नपयन्ति । १८३ ।

शब्दायते सदास्थाने नाऽपृष्टस्तेन कश्चन ।
परं शब्दयति द्वाःस्थः परागमनरोधनः ॥ १८४ ॥
विलसन्ति धर्मस्पृष्टा ये च रङ्गोपजीविनः ।
लासयन्ति रसाभिज्ञा यस्याऽग्रे भरतोत्तमाः ॥ १८५ ॥
विलापयन्ति यं दृष्ट्वा बलवन्तोऽपि शत्रवः ।
विलाययत्यबलानाञ्च हृदयं मदनव्यथा ॥ १८६ ॥
असौ प्रक्रमते योद्धुमेकोऽपि बहुभिः सह ।
नाक्रामन्ति तथाप्येनं विक्रान्ता बहवोऽपि ते ॥ १८७ ॥
वियन्ति वीरसन्तानं हृदो यस्य कुलाङ्गनाः ।
विजायन्तेऽवबोधाय यत्कुलक्षितिपाङ्गनाः ॥ १८८ ॥
प्रथते पृथुवद्यस्य पृथिव्यामुज्ज्वलं यशः ।
प्रथयन्ति प्रथीयांसो गुणाः स्वर्गे च निर्मलाः ॥ १८९ ॥

आस्थाने सभायां, तेन राज्ञा, अपृष्टः अजिज्ञासितः, कश्चन कोऽपि जनः, न शब्दायते ब्रूते, नापृष्टः कस्यचिद्ब्रूयादिति मनुस्मरणादिति भावः । द्वारि तिष्ठतीति द्वाःस्थः द्वारपालकः, 'प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः' इत्यमरः ॥ १८४ ॥

भरतोत्तमाः नटश्रेष्ठाः, लासयन्ति नृत्यैर्नृत्यं प्रकाशयन्ति, यद्वा, नाटकादिकमभिनयन्ति ॥ १८५ ॥

विलापयन्ति अन्तर्दधते, पलायन्ते इति यावत् । मदनव्यथा कामसन्तापः, अबलानां हृदयं, विलाययति द्रवीभूतं करोति ॥ १८६ ॥

प्रक्रमते आरभते । अपूर्वकर्मादावात्मनेपदम् ॥ १८७ ॥

विदन्ति जनयन्ति । अवबोधाः प्रज्ञानानि ॥ १८८ ॥

पृथुवत् वैन्यस्य पृथुराजस्येव । प्रथते प्रकाशं भवति । प्रथयन्ति प्रकाशाः

अमन्ति व्याधयोऽप्येनं न कदाचिद्भयादिव ।
आमयन्ति यमन्यञ्च तमुल्लाघं करोत्यसौ ॥ १९० ॥
वेवेष्टि विष्टपं सर्व्वं कीर्त्तिर्यस्याऽतिशायिनी ।
विष्याति विषवत् प्राणान् त्रयीधर्म्मद्विषामसौ ॥१९१॥
निःशेषं शेषति क्रोधात् प्रतिपक्षक्षमापतीन् ।
एकः शेषति योऽशेषभूतानां भरणे ध्रुवम् ॥ १९२ ॥
क्षिपति प्रतिपक्षाणां हृदये यो भयं ध्रुवम् ।
क्षिप्यति श्रोत्रियाणाञ्च निष्कं पुष्कलमालये ॥ १९३ ॥

---

भवन्ति ॥ १८९ ॥

व्याधयो रोगाः, एनं राजानं, न अमन्ति गच्छन्ति अभिभवन्तीति यावत् । यम् अन्यञ्च जनम्, आमयन्ति पीडयन्ति, व्याधय इत्यनुषङ्गः । असौ राजा, तं व्याधितं जनम्, उल्लाघम् अतिक्रमणीयं व्याधिनिर्मुक्तमितिभावः, करोति ॥ १९० ॥

यस्य राज्ञः, अतिशायिनी सर्व्वातिरिक्ता, अनन्यसाधारणेत्यर्थः, कीर्त्तिः, विष्टपं भुवनं, वेवेष्टि व्याप्नोति । ह्वादिगणीयस्य विषधातोः प्रयोगः । असौ राजा, त्रयीधर्म्मद्विषां वेदत्रयीविहितधर्म्मविघातकानां, प्राणान्, विषवत् विषमिव, विष्याति वियोजयति संहरतीति यावत् ॥ १९१ ॥

प्रतिपक्षक्षमापतीन् प्रतिकूलान् राज्ञः, निःशेषं शेषति समूलम् उन्मूलयति । एकः अन्यसाहाय्यनिरपेक्ष इत्यर्थः, अशेषभूतानां निखिलप्रजानां, भरणे, शेषति शेषत्वमाचरति । यथा एक एव अनन्तः सकलधराभारं बिभर्त्ति तथा सोऽपि राजेतिभावः ॥ १९२ ॥

श्रोत्रियाणां छान्दसानाम्, आलये गृहे, पुष्कलं प्रचुरं, श्रेष्ठं वा, यद्वा चतुः-षष्टिशतपरिमितं, यदुक्तं,—'चतुःषष्टिर्भवेत् कुचिः कुचयोऽष्टौ च पुष्कलम्' इति । निष्कं सुवर्णं, क्षिप्यति ददाति ॥ १९३ ॥

जपति जिह्वया वाचा सर्व्वैरेव समं प्रभुः ।
सम्पृष्टैरपि प्रेम्णा सादरं जापयत्यसौ ॥ १८४ ॥
यौति काले कुलस्त्रीभिः क्षेत्रसन्तानहेतवे ।
युनाति यौवनस्थोऽपि न वेश्याबन्धकीजनैः ॥ १८५ ॥
न रोजयति यः कश्चित् प्राणिनां करुणान्वितः ।
तस्य धर्म्मरतेः रोगा न रुजन्ति प्रजामपि ॥१८६॥
अन्तर्वेद्यामसौ विद्वान् न क्षेवति धृतव्रतः ।
न क्षेवयति सर्व्वज्ञो विवादे वादिभिः सह ॥ १८७ ॥
सम्पद्यते मतिर्यस्य त्रैलोक्येऽपि खगेन्द्रवत् ।
सम्पद्यति पुनः सेनां सागरान्ते महीतले ॥ १८८ ॥

---

यो राजा, काले ऋतुकाले, क्षेत्रसन्तानहेतवे सन्तानोत्पत्त्यर्थं, न तु कामोपभोगायेतिभावः, कुलस्त्रीभिः स्वदारैः, यौति सङ्गच्छते, 'ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा' इति मनुवचनादिति भावः। यौवनस्थोऽपि नव-वयोऽपि प्रबलेन्द्रियग्रामोऽपीत्यर्थः, वेश्याबन्धकीजनैः वारनारीकुलटाभिः, न युनाति सङ्गच्छते। यु सङ्गमे इत्यस्य प्रयोगः ॥ १८५ ॥

करुणान्वितः कारुणिकः, यो राजा, प्राणिनां मध्ये कञ्चिदपि न रोजयति हिनस्ति। धर्म्मे रतिरनुरागो यस्य तस्य राज्ञः, प्रजामपि रोगा न रुजन्ति पीडयन्ति धर्म्मरतेरित्यत्र धर्म्मरत इत्यादर्शपुस्तकपाठो न साधुः ॥ १८६ ॥

धृतव्रतः असौ राजा, अन्तर्वेद्यां यज्ञादिवेदिकामध्ये, न क्षेवति अपवित्रं वाक्यम् न उच्चारयति, यद्वा, अन्तर्वेद्यां भागीरथीयमुनयोरन्तरप्रदेशे ब्रह्मावर्त्त इति ख्याते पवित्रे देशे, न ष्ठीवति क्षेवणमात्रमपि निवारयति ॥ १८७ ॥

यस्य मतिः बुद्धिः, त्रैलोक्येऽपि त्रिभुवनेऽपि, खगेन्द्रवत् खगेन्द्र इव सम्पद्यते, त्रिभुवनव्यापिनी नित्यपरिभ्रमाणेव भवतीत्यर्थः, 'उदारचरितानां तु वसुधैव

सुखं निद्रे सुखं जीवा यत्प्रजा प्रतिपालिता ।
निघति स्तनकक्षोदकपोलाक्षिगलादिकम् ॥ १९९ ॥
दृष्टेव यं विघटते कोपाक्षेपो मृगीदृशाम् ।
विघाटयति चास्फोटे वैरिणां करिणां घटा ॥२००॥
निस्तनन्ति न दुःखार्त्तास्तद्देशे निरुपद्रवे ।
स्तनयत्युग्रशब्देन पर्जन्योऽपि न भीतवत् ॥ २०१ ॥
रसन्ति मधुरैः कण्ठैर्यस्योद्याने पतत्रिणः ।
रसयन्ति सुखाद्यानि तत्करप्रतिपालिताः ॥ २०२ ॥
लज्जते मल्लिकाभ्यर्णे क्षत्रियश्रोत्रियोऽप्यसौ ।
लज्जते लज्जिकानाञ्च वार्त्ता कर्णगता पुनः ॥ २०३ ॥

---

कुटुम्बकम्' इति भावः । लप्स्यते इति द्वयः सम्पूर्व्वकत्वात् आत्मनेपदं, विश्वासप्रादकर्मकत्वञ्च । १९८ ।

निद्रे सुप्यति, निन्द्रधातोः प्रयोगः । निघति चुम्बति ॥ १९९ ।

मृगीदृशां हरिणनयनानां, कोपाक्षेपः मानाख्यकोपकृतं तर्ज्जनं, विघटते अपसरति । आस्फोटे यस्य बाहुशब्दे सति, वैरिणां करिणां घटा रिपुगजसमूहः, विघाटयति पलायते । २०० ।

निस्तनन्ति नदन्ति आर्त्तनादं कुर्व्वन्तीत्यर्थः । स्तनयति गर्ज्जति । पर्जन्यः मेघः । भीतवत् राजदण्डभयेन शङ्कितइव । २०१ ।

पतत्रिणः पक्षिणः, मधुरैः श्रोत्राभिरामैः, कण्ठैः, रसन्ति कूजन्ति । तत्करप्रतिपालिताः सर्व्वे जनाः, सुखाद्यानि सुमिष्टपानभोजनानि, रसयन्ति आस्वादयन्ति । 'चतुष्पाणि तत्करप्रतिपारिताः' इत्यादर्शपुस्तकपाठो न समञ्जसः । २०२ ।

लज्जिका वेश्या, तत्पर्य्यायां तत्संसर्गे । लज्जिकानां वेश्यानां, वार्त्ता संवादः,

यत्र लञ्जयति व्यूहं प्रतिपक्षक्षमाभुजि ।
लभतेऽयं ततो भूमिं हेमहस्त्यश्वादिकम् ॥ २०८ ॥
श्रियं हृत्वाऽपि यद्भूत्या न प्रहर्षति यस्तथा ।
यथा प्रहर्षति श्रुत्वा सत्कवीनां सुभाषितम् ॥२०९॥
धर्म्मे सर्व्वस्वदानेऽपि यस्य ह्रीणायते न धीः ।
ह्रीणयत्यरिवर्गस्य जीविताशाश्च यः सदा ॥ २१०॥
वाहते वाहिनीं हन्तुं बाहुभ्यामाहवेषु यः ।
वहते विहतारातिर्वैकुण्ठरूपस्य यः श्रियम् ॥ २११ ॥
खेदते नित्य सर्व्वोऽपि वपुषोष्णरश्मितः ।
न च खिद्यति तस्याऽङ्गं व्यायामार्जितमेदसः ॥ २१२ ॥

यत्र प्रतिपक्षक्षमाभुजि यस्मिन् शत्रुभूपाले, व्यूहं सुरचितं सैन्यं, लञ्जयति लञ्जमानं प्रच्छादयमानं प्रेरयति, रणकोलाहलकारि सैन्यं प्रेरयतीत्यर्थः । ततः प्रतिपक्षात् राज्ञ इत्यर्थः । लञ्जयतीति प्रेरणार्थे णिजन्तस्य लञ्ज भर्त्से इत्यस्य प्रयोगः । २०८ ।

सर्व्वस्वस्य दानं यत्र तादृशेऽपि धर्म्मे सर्व्वस्वदक्षिणे विश्वजिदादौ यज्ञे, यस्य धीः बुद्धिः, न ह्रीणायते ह्रीणेव आचरति, सर्व्वस्वं ददामि न वेति चिन्ताकुला न भवतीत्यर्थः, प्रत्युत प्रसन्नेन मनसा सर्व्वस्वमुत्सृजतीति भावः । २१० ।

वाहिनीं सेनां । वाहते प्रयतते, वाह प्रयत्ने इत्यस्य प्रयोगः । विहतारातिः विनाशितशत्रुः, यो राजा, वैकुण्ठरूपस्य विष्णोः, श्रियं सम्पदं, वैकुण्ठतुल्यशोभां वहतीत्यर्थः, यद्वा, वैकुण्ठरूपस्य वासुदेवस्य श्रियं शोभां रूपमिति यावत्, वहते धारयति । २११ ।

सर्व्व एव वपुषा शरीरेण, उष्णरश्मितः सूर्यात्, आतपतापादित्यर्थः, खेदते घर्म्माक्तदेही भवति । खिद्यति क्लान्तं भवति । २१२ ।

मोदयन्ते यदुद्याने मारुतं पुष्परेणवः ।
मत्वन्तं गन्धमाघ्राय मोदन्ते तत्पुरस्त्रियः ॥ २१७ ॥
यच्चिराचमनस्नानप्रायश्चित्तैश्च शुध्यति ।
अन्तः शुचीयते तस्य परमात्मविनिश्चयात् ॥ २१८ ॥
भाति गङ्गाजलैर्नित्यं देशे यत्र कविहसन् ।
यः वायति जगत् सर्व्वं विसतन्तुनिभैर्गुणैः ॥ २१९ ॥
यत्प्रजानामुपर्य्युच्चैः पर्जन्योऽपि न गर्ज्जति ।
गर्ज्जयन्ति कवचाग्रैर्भिद्यमानास्तु तस्कराः ॥ २२० ॥
दृढं धर्म्मे विलग्नस्य यस्य न व्ययते पदम् ।
व्ययति स्वर्गलोकाच्च न कीर्त्तिः सुकृतात्मनः ॥ २२१ ॥
स्वरति श्लिष्टया वाचा सर्व्वानानन्दयन्नसौ ।
स्वरयत्यतिदुष्टोऽपि न कदाचित् परिग्रहम् ॥ २२२ ॥

---

पुष्परेणवः कुसुमपरागाः, मारुतं वायुं, मोदयन्ते सुरभीकुर्व्वन्ति । मोदन्ते नन्दन्ति । २१७ ।

शुध्यति शुचिर्भवति । शुचीयते अशुचिः शुचिर्भवति । भृशादिगणमध्ये शुचिशब्दस्य पाठात् अभूततद्भावार्थे क्यङ् । परमात्मविनिश्चयात् ब्रह्मानुसन्धानात् । २१८ ।

विसतन्तुनिभैः मृणालसूत्रसदृशैः, अतिनिर्मलैः कोमलैश्च दयादाक्षिण्यादिभिरित्यर्थः । जगत् पृथिवीं वायति वेष्टते, व्याप्नोतीत्यर्थः । वै वेष्टने इत्यस्य प्रयोगः । २१९ ।

यस्य पदं मर्य्यादा, न व्ययते गच्छति । सुकृतात्मनः पुण्यशीलस्य, यस्य कीर्त्तिः, स्वर्गलोकाच्च न व्ययति गच्छति अपयातीति यावत् । २२१ ।

स्वरति कथयति आलपतीति यावत् । परिग्रहं परिजनं, न स्वरयति अधिक्षिपति भर्त्सयतीति यावत्, स्वरयतीति स्वर आक्षेपे इत्यस्य चुरादेः

शमन्ति यद्वियोगेन सीमन्तिन्यः स्मरातुराः।
यः सामयति सामज्ञः स्निग्धैरालोकनैश्च ताः ॥२२३॥
हिताहितं प्रजानां यः प्रेक्षते नित्यमात्मना।
प्रेक्षयत्यखिलानाञ्च कार्य्यसिद्धिं नियोगिनाम् ॥२२४॥
अभिलष्यति साधूनामुदयं सर्व्वतोदयः।
साधुलोकोऽपि निःसीमां तस्याऽभिलषते श्रियम् ॥२२५॥
कायः क्लाम्यति नाक्रन्दे यस्य प्रहरतो रिपून्।
क्लामन्ति रिपुसैन्याश्च प्लवमाना दिशो दश ॥ २२६ ॥
यः स्वप्नेनाऽपि नात्मीयं गुणं क्वाऽपि कत्थते।
कथयत्यादिराजानां चरितानि सहस्रशः ॥ २२७ ॥

---

चुरादिगणीयस्य प्रयोगः ॥ २२२ ॥

यद्वियोगे यस्य राज्ञः विरहे, सीमन्तिन्यः कामिन्यः स्मरातुराः कामपीडिताः सत्यः, शमन्ति खिन्ना भवन्ति। शम वैकल्ये इत्यस्य प्रयोगः। सामज्ञः प्रियवचनरचनाचतुरः, मानिनीमानविघातदक्षइतिभावः, यदुक्तं साहित्यदर्पणे, 'तत्र प्रियवचः साम' इति। स्निग्धैः मधुरैः, आलोकनैः वीक्षितैः, ताः विरहातुराः सीमन्तिनीः, सामयति सान्त्वयति। साम सान्त्वने इत्यस्य प्रयोगः ॥२२३॥ आत्मना स्वयम्। नियोगिनां रक्षादिकार्य्ये नियुक्तानाम् ॥ २२४ ॥

आक्रन्दे दारुणयुद्धे, 'आक्रन्दः क्रन्दने हाने मित्रदारुणयुद्धयोरिति मेदिनी। रिपून् शत्रून्, प्रहरतः निघ्नतः, यस्य राज्ञः, कायः शरीरं, न क्लाम्यति क्लान्तीभवति। प्लवमानाः पलायमानाः ॥ २२६ ॥

कत्थते श्लाघते प्रशंसतीति यावत्। कथयति कीर्त्तयति। कत्थते इति कत्थ श्लाघायामित्यस्य प्रयोगः ॥ २२७ ॥

०

व्यनक्ति यच्छरीरस्थं लक्षणं सार्व्वभौमताम् ।
व्यञ्जयन्ति च गोदानं यद्देशे याजिका द्विजाः ॥२२८॥
आखोटन्ति नखैरङ्गं सुखमाखोटयन्ति च ।
यद्व्यूहकृतवैधव्या रुदत्योऽरिकुलस्त्रियः ॥ २२९ ॥
सम्पाशयति यः शत्रून् शृङ्खलैरखिलानपि ।
विपाशयति चात्मानं ज्ञानं कर्म्मक्षयं नयन् ॥२३०॥
घूर्णते श्रावकस्याऽपि यद्गुणश्रवणाच्छिरः ।
मित्रोदासीनभूतानां घुणतीति किमद्भुतम् ॥२३१॥

---

सार्व्वभौमता चक्रवर्त्तिता, व्यनक्ति सूचयति, चक्रवर्त्तिलक्षणोपेतोऽसौ राजा इति भावः। याजिकाः यज्ञशीलाः, द्विजाः ब्राह्मणाः, गोदानं केशान्तनामकसंस्कारं, यद्वा यज्ञे धेनुदानरूपं कर्म्म, व्यञ्जयन्ति द्योतयन्ति, यथाशास्त्रं सम्पादयन्तीत्यर्थः ॥ २२८ ॥

नखैः नखाघातैः, अङ्गं शरीरं, आखोटन्ति, छिन्दन्ति, शोकोन्मत्ततयेति भावः। सुखम् आखोटयन्ति विनाशयन्ति। यस्य व्यूहेन सुरचितेन सैन्येन कृतं वैधव्यं विधवायाः गतभर्त्तृकायाः भावः, पतिविनाश इत्यर्थः, यासां ताः, अतएव रुदत्यः विलपनपराः ॥ २२९ ॥

सम्पाशयति बध्नाति। पाश बन्धने इत्यस्य सम्पूर्व्वस्य प्रयोगः। आत्मानं जीवात्मानं, कर्म्मक्षयं शुभाशुभकर्म्मविनाशजन्यं, ज्ञानम् आत्मज्ञानमित्यर्थः, नयन् प्रापयन्, विपाशयति भवपाशात् मोचयति, आत्मानमितिशेषः ॥ २३० ॥

श्रावकस्य शत्रुभूतस्य। मित्रोदासीनभूतानामिति। कस्यचित् राज्ञः अव्यवहितानन्तरमेव यस्य राज्यं स तस्य अरिः, तदनन्तरं तु यस्य राज्यं स प्रथमस्य मित्रम्। उदासीनभूतस्तु शत्रुमित्राभ्यां परतरो राजा, विजिगीषोः शत्रुमित्रभूमितो व्यवहितः, व्यवहितत्वादेव नोपकारी नाप्यपकारी केवलं तूष्णीमासीन इव, तेषां शिरो मूर्द्धा, घुणति भ्रमति ॥ २३१ ॥

यस्य लक्ष्मीर्विकसति प्रजा धर्मेण रक्षितुः ।
विकाशन्ते च भूयांसो गुणाः श्रवणहारिणः ॥ २१२ ॥
खिलन्ति बालकाः कामं क्रीडन्ति स्थविरा अपि ।
अज्ञातव्याधिदौर्गत्यविप्लवा यस्य मण्डले ॥ २१३ ॥
यः कुटयति शत्रूणां दृप्ता गजघटा रणे ।
संकुटन्ति भयाक्रान्ताः शत्रवो यस्य दर्शनात् ॥ २१४ ॥
कृपते कृपणेष्वेव कृपाणार्जितविक्रमः ।
प्रचुरं प्रार्थितोऽप्यर्थं नाऽसौ कृपयति प्रभुः ॥ २१५ ॥

---

धर्मेण राजधर्मं पुरस्कृत्य, प्रजाः प्रकृतीः, रक्षितुः पालयितुः, यस्य राज्ञः, लक्ष्मीः राजश्रीः, विकसति नितरां प्रकाशते वर्धत इति यावत् । श्रवणहारिणः कर्णमधुराः गुणाः दयादाक्षिण्यादयः, विकाशन्ते शोभन्ते । रक्षितुरित्यत्र रक्षिता इत्यादर्शपुस्तकपाठो न साधुः ॥ २१२ ॥

स्थविराः वृद्धाः । व्याधिः रोगः, दौर्गत्यं दारिद्र्यादिदुःखं, विप्लवः परनृपति-राष्ट्रादितो भयं स्वराष्ट्रोपद्रवो वा, ते अज्ञाताः अननुभूताः यैः, ते तादृशाः । मण्डले सुविस्तृते राज्ये ॥ २१३ ॥

गजघटाः करिसमूहान्, कुटयति दलति विनाशयतीति यावत् । संकुटन्ति भयेन आकुञ्चितदेहा भवन्ति ॥ २१४ ॥

कृपणेषु कृपापात्रेषु जनेषु, कृपते दयते, कृपां प्रदर्शयतीति यावत् । कृपाणेन खड्गेन शौर्यसम्पदेतिभावः, अर्जितः विक्रमः पराक्रमः येन सः, भुजबलजन्यप्रतापदर्पितः । कृपयति दुर्बलो भवति । प्रचुरमपि अर्थं दातुमितिशेषः । 'कृपाणार्जितविक्रमः' इत्यत्र 'कृपणार्जितविक्रमः' इति आदर्शपुस्तकपाठो न साधुः ॥ २१५ ॥

अजस्रमस्रुभिः शत्रुस्त्रीणां धौतमिवाधिकम् ।
यद्यशः श्वेतते दिक्षु श्विन्दते च सुरालये ॥ २३६ ॥
कुशस्थलं पन्थयति पथयत्युत्तरापथम् ।
यत्खड्गखण्डिताशेषप्रचण्डरिपुमण्डलम् ॥ २३७ ॥
ह्रादते स्निग्धगम्भीरं यद्देशे वर्षुको घनः ।
ह्लादते यस्य लोभेन कृषीवलजनोऽप्यलम् ॥ २३८ ॥
ज्योत्स्नाच्छलेन मूर्च्छन्ति यद्गुणाः शशलाञ्छने ।
न तं स्फूर्च्छति यत्राऽसौ तुष्टः सहृदयः प्रभुः ॥ २३९ ॥
द्रुणोति द्रोणवद्युद्धे शरजालेन यो रिपून् ।
द्रूणाति प्रक्षतो यस्य दिङ्मुखेषु रिपुव्रजः ॥ २४० ॥

---

अधिकम् अधिकतरं, श्वेतते शुक्लं भवति, स्वतः शुक्लस्यापि यशसो रिपुनारीनयनजलक्षालितत्वात् शौक्ल्याधिक्यं ज्ञेयम् । श्विन्दते श्वेतं भवति । श्वितश्विन्द्योः शौक्ल्यार्थयोः प्रयोगः ।१२६ ।

कुशस्थलं कान्यकुब्जदेशम् । उत्तरापथम् उत्तरदिग्भागम् । पन्थयति पथयति चेति गच्छतीत्यर्थः, तत्र तत्र पलायत इति भावः । २२७ ।

वर्षुकः वर्षणशीलः, लषपतपदेत्यादिना उकञ्प्रत्ययः । घनो मेघः, स्निग्धगम्भीरं यथा स्यात् तथा ह्रादते गर्जति । कृषिरस्यास्तीति कृषीवलः, कर्षक इत्यर्थः, रजःकृष्यादिना वलच्प्रत्ययः, वले इति दीर्घः । ह्लादते आह्लादितो भवति । १२८ ।

सहृदयः सामाजिकः गुणग्राहीत्यर्थः, असौ प्रभुः राजा, यत्र यस्मिन् जने, तुष्टः, योऽस्य प्रीतिकरं सत्कर्म करोतीत्यर्थः, तं जनं, न स्फूर्च्छति विस्मरति ।२२९।

द्रोणवत् द्रोणाचार्यवत्, शरजालेन बाणसमूहेन, रिपून् द्रुणोति उपतापयति । रिपुव्रजः शत्रुसमूहः, दिङ्मुखेषु दिगन्तरेषु, द्रूणाति गच्छति

लक्ष्मीमालिङ्गति क्रीडाद् यः सदा धरणीपतिः ।
आलिङ्गयति रत्नांशुजालेन मणिकुट्टिमम् ॥ २४१ ॥
रथान् सवति संग्रामे स्वयमेव जवेन यः ।
सोमं सुनोति यज्ञेषु परलोकजिगीषया ॥ २४२ ॥
मनो मादयते यस्य योगाभ्यासरसायनम् ।
सर्व्वलोकातिशायिन्या विभूत्या च न माद्यति ॥२४३॥
खिद्यति ज्ञातिवर्गेषु खेदयत्यात्मबन्धुषु ।
रणे शूरयते यस्य शूर्य्यते विद्विषां बलम् ॥ २४४ ॥
यः शीलति सदा धर्मं शीलयत्यात्मनो हितम् ।
नच क्लमति शोकेन नच दुःखेन ताम्यति ॥ २४५ ॥

---

पलायतइत्यर्थः ॥ २४० ॥

मणिकुट्टिमं मणिमयबद्धभूमिं, रत्नांशुजालैः रत्नाभरणरश्मिभिः, आलिङ्गयति रञ्जयति ॥ २४१ ॥

संग्रामे युद्धे, रथान् सवति प्रेरयति । षु प्रेरणे इत्यस्य प्रयोगः । परलोकजिगीषया स्वर्गकामनया, यज्ञेषु सोमं यज्ञाङ्गभूतां सोमलतां, सुनोति निष्पीडयति, यज्ञे सोमलतां निष्पीड्य तद्रसं पिबतीत्यर्थः । षु अभिषवे इत्यस्य स्वादिगणीयस्य प्रयोगः ॥ २४२ ॥

योगाभ्यासरसायनं ब्रह्मानुसन्धानरूपं, महौषधं, यस्य मनः मादयते आनन्दयति । सर्व्वलोकातिशायिन्या लोकोत्तरया, विभूत्या सम्पदा, न माद्यति मत्तोभवति ॥ २४३ ॥

रणे युद्धे, शूरयते पराक्रमते । विद्विषां शत्रूणां बलं सैन्यं, शूर्य्यते विनाश्यति ॥ २४४ ॥

धर्मं शीलति अभ्यस्यति आलोचयतीति यावत् । शोकेन इष्टनाशादि-

छिनत्ति नित्यमश्रान्तं छेदयत्यहितोदयम् ।
क्ष्णोति धीः सदा यस्य क्ष्णुवति श्रीश्च भूतले ॥२४६॥
यः क्षेपति सतां मार्गं गवेषयति सत्क्रियाम् ।
यत् किञ्चिदप्यधीतेऽसौ यदध्येति तदक्षयम् ॥ २४७ ॥
आलोचते सदा नीतिमालोचयति सत्क्रियाम् ।
आलोकन्ते जनव्रजा आलोकयति यश्च ताः ॥ २४८ ॥
यो न कुत्सयते कुत्सां न तु कुत्सति निर्धनम् ।
न भर्त्सयति धर्मिष्ठान् न तु भर्त्सयते परान् ॥२४९॥
मण्डयन्ति गुणाः सर्वे यो गुणानेव मण्डति ।
भूषणं भूषयत्यन्यं यस्तु भूषति भूषणम् ॥ २५० ॥
उन्मूलयति यः शत्रूनुन्मूलति तमांसि च ।
राष्ट्रं पीडति नात्मीयं पीडयत्यरिमण्डलम् ॥ २५१ ॥

---

छलेन, न क्षमति विकलो न भवति, तत्र वैकल्ये इत्यस्य प्रयोगः । २४५ ।

धीः बुद्धिः, क्ष्णोति वर्द्धते । श्रीश्च राजलक्ष्मीश्च क्ष्णुवति वर्द्धते । अत्र हनौ इत्यस्य प्रयोगः । २४६ ।

सतां मार्गं सदाचारपद्धतिं, क्षेपते अवलम्बते । गवेषयति अन्वेषयति । गवेष अन्वेषणे इत्यस्य चुरादिकस्यैतस्य प्रयोगः । २४७ ।

मण्डयन्तीत्यादि । गुणाः शौर्यवीर्यदयादाक्षिण्यादयः, सर्वे जनं, मण्डयन्ति भूषयन्ति । यो राजा गुणानेव मण्डति भूषयति, गुणाः सर्वेषु उत्कर्षहेतवोऽपि अत्र आधारगुणेन स्वयमेव उत्कर्षं लभन्ते इत्यर्थः । एवं यस्तु भूषणमपि भूषति अलङ्कारमप्यलङ्करोतीत्यर्थः । 'अप्यङ्गनेपथ्यमलञ्चकार' इति कुमारः । २५० ।

निवर्हयति बुद्ध्याऽरीन् तपसा यो निवर्हते ।
इहाऽर्हति च यः पूजां युद्धेऽपीन्द्रस्समर्हति ॥२५२॥
भक्त्या नमति यो देवान् नमस्यति गुरून् द्विजान् ।
व्यश्नुते रोदसी कीर्त्त्या स्वधर्ममनुरुध्यते ॥ २५३ ॥
दिवा निद्रायते नाऽसौ न निद्राति च सन्ध्ययोः ।
न गृध्यति परद्रव्यं नच गर्हयते परम् ॥ २५४ ॥
तूर्य्यते न क्वचित् कार्य्ये त्वरते धर्म्म एव यः ।
ध्वनन्ति यद्गुणान् मर्त्त्या ध्वनयन्ति च खेचराः ॥२५५॥
तर्जते यो हि भूपालान् न तर्जयति सज्जनम् ।
न दुनोति परं वाचा दुर्जनोक्त्या न दूयते ॥ २५६ ॥

---

बुद्ध्या नीतिशास्त्रानुसारिण्या प्रज्ञया, अरीन् शत्रून् निवर्हयति विनाशयति। तपसा तपोबलेन, निवर्हते दीप्यते। इह लोके, पूजाम् सम्मानम्, अर्हति भजति। युद्धे, इन्द्रोऽपि स्वयं ईश्वरोऽपि, तं राजानम्, अर्हति पूजयति। २५२।

कीर्त्त्या यशसा, रोदसी द्यावाभूमी, व्यश्नुते व्याप्नोति। स्वधर्मं प्रजापालनरूपं राजधर्मम्, अनुरुध्यते सर्व्वप्रयत्नेन रक्षति। २५३।

सन्ध्ययो सायं प्रातश्च, यदुक्तं,—'त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयौ। नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते। इति। परद्रव्यं परधनं, न गृध्यति लब्धुमिच्छति ॥ २५४।

तूर्य्यते त्वरते। ध्वनन्ति घोषयन्ति। मर्त्त्याः मानवाः। खेचराः नभोविहारिणः देवगन्धर्व्वादयः। २५५।

वाचा अप्रियवचनैरित्यर्थः, परं न दुनोति उपतापयति। दुर्जनोक्त्या दुर्जनवाक्येन च, न दूयते स्वयं दुःखितो न भवति। २५६।

न सूदते मतिर्यस्य यः सूदयति माधवम्।
चिकित्सति जगद्व्याधिं साधु केतयति प्रजाः ॥२५७॥
सत्यं सङ्गिरते यश्च गृणाति सुभगं वचः।
यो भुङ्क्ते भुवनं धर्म्मे यस्य धीर्न भुजत्यलम् ॥ २५८ ॥
पतन्ति यद्द्विषो दिक्षु दुरितञ्च पलायते।
जहाति दुर्जनैः सङ्गं जिहीते सज्जनाश्रयम् ॥ २५९ ॥
जिनाति धर्म्मपश्चाऽसौ नेन्द्रियार्थेषु लीयते।
जायन्ते यस्य सत्पुत्रा जयन्ति च गुणोदयाः ॥ २६० ॥
यः पृथ्वीं पाति पायन्ति यत्प्रभावाच्च मानवाः।
चित्तं रज्यति नारीणां स्वयं ता अनुरज्यते ॥ २६१ ॥
रहत्यविदुषां सङ्गं रहयत्यप्रियं सदा।
कीर्त्तिर्भ्राम्यति यस्योर्व्यां गुणाः स्वर्गे भ्रमन्ति च ॥२६२॥

---

यस्य मतिः बुद्धिः, न सूदते क्षरति। माधवं रिपुकुलं, सूदयति विनाशयति ॥ २५७ ॥

सत्यं सङ्गिरते प्रतिजानीते। सुभगं वचः मधुरं वाक्यं, गृणाति उदीरयति। धर्म्मे यस्य धीः बुद्धिः, न भुजति, कुटिला भवति, सरलात्मना धर्म्मं सेवते इत्यर्थः, भुज कौटिल्ये इत्यस्य तौदादिकस्य प्रयोगः। २५८।

यद्द्विषः यस्य शत्रवः, दिक्षु पतन्ति गच्छन्ति पलायन्त इत्यर्थः। दुरितं पापं पलायते अपसरति। सज्जनाश्रयं साधुसङ्गं, जिहीते प्राप्नोति। २५९।

पृथ्वीं धरणीं, पाति रक्षति। यत्प्रभावात् यस्य प्रतापेन, मानवः, पायन्ति शुष्यन्ति, अकर्म्मीका भवन्तीत्यर्थः। नारीणां चित्तं रज्यति तस्मिन् अनुरक्तं भवति। २६१।

अविदुषां मूर्खाणां, सङ्गं संसर्गं, रहति परिहरति। अप्रियं रहयति अमङ्गलं निराकरोति। २६२।

मानं खण्डयति स्त्रीणां खण्डते द्विषतां शिरः ।
प्रोषति द्विषतः सर्व्वान् मुष्णत्यपि च तत्पुरम् ॥२६३॥
चर्व्वापयति ग्रासांश्च नाऽर्थमर्थयतेऽन्यतः ।
विभाजयति यो द्रव्यं सभाजयति सज्जनान् ॥२६४॥
लुभ्यत्यर्थे च कामे च धर्म्मे लुभ्यति यः सदा ।
वेदान् गदति विस्पष्टं नचाऽन्यं गदति क्वचित् ॥२६५॥
अश्नाति शुचिमाहारमश्नुते च परन्तपः ।
इच्छते सर्व्वकार्य्येषु कुलं इच्छयते द्विषाम् ॥ २६६ ॥
श्रियं यक्षयते भक्त्या विभूत्या यक्ष यक्षति ।
यः खेटति सतां मध्ये स खोटति निराश्रयः ॥२६७॥
गाहते ग्राममत्यर्थं गाधते नाऽर्थमन्यतः ।
योऽस्मै गृह्णाति तद्दुर्गं तत्क्षणादेव गुध्यति ॥२६८॥

सर्व्वान् द्विषतः शत्रून्, प्रोषति दहति । तत्पुरं शत्रुनगरं मुष्णाति हरति ॥ २६३ ॥

चर्व्वमाचष्टे इति वाक्येन चर्व्वापयति । अर्थयते याचते । सभाजयति, पूजयति, सभाज पूजायामित्यस्य चदन्तस्य चुरादिगणीयस्य प्रयोगः ॥ २६४ ॥

शुचिं पवित्रम्, आहारं भक्ष्यद्रव्यम्, अश्नाति भुङ्क्ते, 'सुपर्व्वीचितमश्नाय-मथान्यत्वैर्विचापदैः' इति मनुवचनात् । अश्नुते व्याप्नोति ॥ २६६ ॥

यक्षयते पूजयति यक्षति यक्षवदाचरति, कुबेरतुल्यविभवोऽसौ राजे-तिभावः ॥ २६७ ॥

गाधते इच्छति । यो जनः, अस्मै राज्ञे, गृह्णाति कुप्यति, तत्क्षणात् अवि-लम्बितं, तद्दुर्गं गुध्यति वेष्टते ॥ २६८ ॥

एजते राजचिह्नैर्यः एजयत्यखिलं जगत्।
इन्धे युद्धेषु यत्तेजः एधते यः श्रियाऽधिकम् ॥ २६९ ॥
यः भौटति सभामध्ये तं भेटति निरीक्ष्य यः।
प्रतिषेधति यः शत्रून् कार्य्यं तस्याशु सिध्यति ॥२७०॥
नयन्ते यद्गुणाः सर्व्वं यस्तान्नयति दिङ्मुखम्।
श्रिया मदति मन्नाति सरस्वत्या च यः सदा ॥ २७१ ॥

---

एजते शोभते। इन्धे दीप्यते। यः श्रिया लक्ष्म्या, अधिकम् एधते वर्द्धते ॥ २६९ ॥

भौटति गर्व्वं प्रकाशयति। भेटति अवजानाति। प्रतिषेधति निवारयति। सिध्यति सम्पद्यते ॥ २७० ॥

श्रिया लक्ष्म्या, मदति तुष्यति। सरस्वत्या विद्यया मन्नाति आनन्दितो भवति ॥ २७१ ॥

---

इतिसमासमवासगुणोदयं कविरहस्यमिदं रसिकप्रियम्।
सदभिधाननिधानहलायुधद्विजवरस्य कृतिः सुकृतार्थिनः॥

शुभमस्तु ॥

